# पराशरसंहिता

महर्षिश्रीपराशरविरचिता।

व्रजभूषणदास और कम्पनी

चांदनी चौक के उत्तर नई सड़क

बनारस।

Benares:

PRINTED AT THE BENARES PRINTING PRESS

BY CHHANNULAL.

1877.

# ॥ पराशरसंहिता ॥

॥ श्रीगणेशाय नमः ॥

अथातो हिमशैलाग्रे देवदारुवनालये ।
व्यासमेकाग्रमासीनमपृच्छन्नृषयः पुरा ॥ १ ॥
मानुषाणां हितं धर्मं वर्तमाने कलौ युगे ।
शौचाचारं यथावच्च वद सत्यवतीसुत ! ॥ २ ॥
तच्छ्रुत्वा ऋषिवाक्यं तु सशिष्याग्न्यर्कसन्निभः ।
प्रत्युवाच महातेजाः श्रुतिस्मृतिविशारदः ॥ ३ ॥
न चाहं सर्वतत्त्वज्ञः कथं धर्मं वदाम्यहम् ।
अस्मत् पितैव प्रष्टव्य इति व्यासः सुतोऽवदत् ॥ ४ ॥
ततस्ते ऋषयः सर्वे धर्मतत्त्वार्थकाङ्क्षिणः ।
ऋषिं व्यासं पुरस्कृत्य गता बदरिकाश्रमे ॥ ५ ॥
नानावृक्षसमाकीर्णं फलपुष्पोपशोभितम् ।
नदीप्रस्रवणाकीर्णं पुण्यतीर्थैरलङ्कृतम् ॥ ६ ॥
मृगपक्षिगणाकीर्णं च देवतायतनावृतम् ।
यक्षगन्धर्वसिद्धैश्च नृत्यगीतसमाकुलम् ॥ ७ ॥
तस्मिन्नृषिसभामध्ये शक्तिपुत्रं पराशरम् ।
सुखासीनं महात्मानं मुनिमुख्यगणावृतम् ॥ ८ ॥
कृताञ्जलिपुटो भूत्वा व्यासस्तु ऋषिभिः सह ।
प्रदक्षिणाभिवादैश्च स्तुतिभिः समपूजयत् ॥ ९ ॥
अथ सन्तुष्टमनसः पराशरमहामुनिः ।

# ॥ पराशरसंहिता ॥

॥ श्रीगणेशाय नमः ॥

अथातो हिमशैलाग्रे देवदारुवनालये ।
व्यासमेकाग्रमासीनमपृच्छन्नृषयः पुरा ॥ १ ॥
मानुषाणां हितं धर्मं वर्तमाने कलौ युगे ।
शौचाचारं यथावच्च वद सत्यवतीसुत ! ॥ २ ॥
तच्छ्रुत्वा ऋषिवाक्यं तु सशिष्योऽग्न्यर्कसन्निभः ।
प्रत्युवाच महातेजाः श्रुतिस्मृतिविशारदः ॥ ३ ॥
न चाहं सर्वतत्त्वज्ञः कथं धर्मं वदाम्यहम् ।
अस्मत् पितैव प्रष्टव्य इति व्यासः सुतोऽवदत् ॥ ४ ॥
ततस्ते ऋषयः सर्वे धर्मतत्त्वार्थकाङ्क्षिणः ।
ऋषिं व्यासं पुरस्कृत्य गता बदरिकाश्रमे ॥ ५ ॥
नानावृक्षसमाकीर्णं फलपुष्पोपशोभितम् ।
नदीप्रस्रवणाकीर्णं पुण्यतीर्थैरलङ्कृतम् ॥ ६ ॥
मृगपक्षिगणाकीर्णं देवतायतनावृतम् ।
यक्षगन्धर्वसिद्धैश्च नृत्यगीतसमाकुलम् ॥ ७ ॥
तस्मिन्नृषिसभामध्ये शक्तिपुत्रं पराशरम् ।
सुखासीनं महात्मानं मुनिमुख्यगणावृतम् ॥ ८ ॥
कृताञ्जलिपुटो भूत्वा व्यासस्तु ऋषिभिः सह ।
प्रदक्षिणाभिवादैश्च स्तुतिभिः समपूजयत् ॥ ९ ॥
अथ सन्तुष्टमनसः पराशरमहामुनिः ।

आह सुस्वागतं ब्रूहीत्यासीनो मुनिपुङ्गवः ॥ १० ॥
व्यासः सुस्वागतं ये च ऋषयश्च समन्ततः ।
कुशलं कुशलेत्युक्त्वा व्यासः पृच्छत्यतः परम् ॥ ११ ॥
यदि जानासि मे भक्तिं स्नेहाद्वा भक्तवत्सल ! ।
धर्मं कथय मे तात ! अनुग्राह्यो ह्यहं तव ॥ १२ ॥
श्रुता मे मानवा धर्मा वाशिष्ठाः काश्यपास्तथा ।
गार्गेया गौतमाश्चैव तथा चौशनसाः स्मृताः ॥ १३ ॥
अत्रेर्विष्णोश्च साम्वर्ता दाक्षा आङ्गिरसास्तथा ।
शातातपाश्च हारीता याज्ञवल्क्यकृताश्च ये ॥ १४ ॥
कात्यायनकृताश्चैव प्राचेतसकृताश्च ये ।
आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च ॥ १५ ॥
श्रुता ह्येते भवत्प्रोक्ताः श्रौतार्थास्ते न विस्मृताः ।
अस्मिन्मन्वन्तरे धर्माः कृतत्रेतादिके युगे ॥ १६ ॥
सर्वे धर्माः कृते जाताः सर्वे नष्टाः कलौ युगे ।
चातुर्वर्ण्यसमाचारं किञ्चित् साधारणं वद ॥ १७ ॥
व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः ।
धर्मस्य निर्णयं प्राह सूक्ष्मं स्थूलञ्च विस्तरात् ॥ १८ ॥
शृणु पुत्र ! प्रवक्ष्येऽहं शृण्वन्तु ऋषयस्तथा ।
कल्पेकल्पे क्षयोत्पत्तौ ब्रह्मविष्णुमहेश्वराः ॥ १९ ॥
श्रुतिः स्मृतिः सदाचारा निर्णेतव्याश्च सर्वदा ।
न कश्चिद्वेदकर्त्ता च वेदस्मर्त्ता चतुर्मुखः ॥ २० ॥
तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे ।
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ॥ २१ ॥

अन्ये कलियुगे नृणां युगरूपानुसारतः ।
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ॥ २२ ॥
द्वापरे यज्ञमित्यूचुर्दानमेकं कलौ युगे ।
कृते तु मानवो धर्मस्त्रेतायां गौतमः स्मृतः ॥ २३ ॥
द्वापरे शाङ्खलिखितः कलौ पाराशरः स्मृतः ।
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ॥ २४ ॥
द्वापरे कुलमेकन्तु कर्त्तारं च कलौ युगे ।
कृते सम्भाषणात् पापं त्रेतायाञ्चैव दर्शनात् ॥ २५ ॥
द्वापरे चान्नमादाय कलौ पतति कर्मणा ।
कृते तु तत्क्षणाच्छापस्त्रेतायां दशभिर्दिनैः ॥ २६ ॥
द्वापरे मासमात्रेण कलौ संवत्सरेण तु ।
अभिगम्य कृते दानं त्रेतास्वाहूय दीयते ॥ २७ ॥
द्वापरे याचमानाय सेवया दीयते कलौ ।
अभिगम्योत्तमं दानमाहूतं चैव मध्यमम् ॥ २८ ॥
अधमं याच्यमानं स्यात् सेवादानञ्च निष्फलम् ।
कृते चास्थिगताः प्राणास्त्रेतायां मांससंस्थिताः ॥ २९ ॥
द्वापरे रुधिरं यावत् कलावन्नादिषु स्थिताः ।
धर्म्मो जितो ह्यधर्मेण जितः सत्योऽनृतेन च ॥ ३० ॥
जिता भृत्यैस्तु राजानः स्त्रीभिश्च पुरुषा जिताः ।
सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति ॥ ३१ ॥
कुमार्य्यश्च प्रसूयन्ते तस्मिन् कलियुगे सदा ।
युगेयुगे च ये धर्मास्तत्रतत्र च ये द्विजाः ॥ ३२ ॥
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः ।

युगेयुगे च सामर्थ्यं शेषं मुनिविभाषितम् ॥ ३३ ॥
पराशरेण चाप्युक्तं प्रायश्चित्तं प्रणीयते ।
अहमद्यैव तद्धर्ममनुस्मृत्य ब्रवीमि वः ॥ ३४ ॥
चातुर्वर्ण्यसमाचारं शृणुध्वं मुनिपुङ्गवाः ! ।
पाराशरमतं पुण्यं पवित्रं पापनाशनम् ॥ ३५ ॥
चिन्तितं ब्राह्मणार्थाय धर्मसंस्थापनाय च ।
चतुर्णामपि वर्णानामाचारो धर्मपालकः ॥ ३६ ॥
आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ।
षट्कर्माभिरतो नित्यं देवतातिथिपूजकः ॥ ३७ ॥
हुतशेषन्तु भुञ्जानो ब्राह्मणो नावसीदति ।
सन्ध्यास्नानं जपो होमः स्वाध्यायो देवतार्चनम् ॥ ३८ ॥
वैश्वदेवातिथेयञ्च षट्कर्माणि दिनेदिने ।
प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ॥ ३९ ॥
वैश्वदेवे तु संप्राप्तः सोऽतिथिः स्वर्गसंक्रमः ।
दूराद्यानं पथि श्रान्तं वैश्वदेव उपस्थितम् ॥ ४० ॥
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ।
न पृच्छेद्गोत्रचरणं न स्वाध्यायव्रतानि च ॥ ४१ ॥
हृदयं कल्पयेत् तस्मिन् सर्वदेवमयो हि सः ।
नैकग्रामीणमतिथिं विप्रं साङ्गमिकं तथा ॥ ४२ ॥
अनित्यं ह्यागतो यस्मात् तस्मादतिथिरुच्यते ।
अपूर्वः सुव्रती विप्रो अपूर्वो वातिथिस्तथा ॥ ४३ ॥
वेदाभ्यासरतो नित्यं त्रयोऽपूर्वा दिनेदिने ।
वैश्वदेवे तु संप्राप्ते भिक्षुके गृहमागते ॥ ४४ ॥

उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत् ।
यती च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ॥ ४५ ॥
तयोरन्नमदत्त्वा च भुक्त्वा चान्द्रायणं चरेत् ।
यतिहस्ते जलं दद्याद्भैक्षं दद्यात् पुनर्जलम् ॥ ४६ ॥
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ।
वैश्वदेवकृतान् दोषान् शक्तो भिक्षुर्व्यपोहितुम् ॥ ४७ ॥
नहि भिक्षुकृतान् दोषान् वैश्वदेवो व्यपोहति ।
अकृत्वा वैश्वदेवन्तु भुञ्जते ये द्विजातयः ॥ ४८ ॥
सर्वे ते निष्फला ज्ञेयाः पतन्ति नरके ध्रुवं ।
शिरोवेष्टन्तु यो भुङ्क्ते यो भुङ्क्ते दक्षिणामुखः ॥ ४९ ॥
वामपादे करं न्यस्य तद्वै रक्षांसि भुञ्जते ।
यतये काञ्चनं दत्त्वा ताम्बूलं ब्रह्मचारिणे ॥ ५० ॥
चौरेभ्योऽप्यभयं दत्त्वा दातापि नरकं व्रजेत् ।
पापो वा यदि चाण्डालो विप्रघ्नः पितृघातकः ॥ ५१ ॥
वैश्वदेवे तु सम्प्राप्तः सोऽतिथिः स्वर्गसंक्रमः ।
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ॥ ५२ ॥
पितरस्तस्य नाश्नन्ति दशवर्षशतानि च ।
न प्रसज्याति गो विप्रो ह्यतिथिं वेदपारगम् ॥ ५३ ॥
अददन्नान्नमात्रन्तु भुक्त्वा भङ्क्ते तु किल्बिषम् ।
ब्राह्मणस्य मुखं क्षेत्रं निरुदकमकण्टकम् ॥ ५४ ॥
वापयेत् सर्वबीजानि सा कृषिः सर्वकामिका ।
सुक्षेत्रे वापयेद्बीजं सुपात्रे दापयेद्धनं ॥ ५५ ॥
सुक्षेत्रे च सुपात्रे च यत् क्षिप्तं नैव नश्यति ।

अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः ॥ ५६ ॥
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ।
क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रचण्डवत् ॥ ५७ ॥
विजित्य परसैन्यानि क्षितिं धर्म्मेण पालयेत् ।
न श्रीः कुलक्रमायाता स्वरूपालिखितापि या ॥ ५८ ॥
खड्गेणाक्रम्य भुञ्जीत वीरभोग्या वसुन्धरा ।
पुष्पंपुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ॥ ५९ ॥
मालाकार इवोद्याने न तथाङ्गारकारकः ।
लोहकर्म तथा रत्नं गवाञ्च प्रतिपालनम् ॥ ६० ॥
वाणिज्यं कृषिकर्माणि वैश्यवृत्तिरुदाहृता ।
शूद्राणां द्विजशुश्रूषा परो धर्मः प्रकीर्त्तितः ॥ ६१ ॥
अन्यथा कुरुते किञ्चित्तद्भवेत्तस्य निष्फलम् ।
लवणं मधु तैलञ्च दधि तक्रं घृतं पयः ॥ ६२ ॥
न दूष्येच्छूद्रजातीनां कुर्यात् सर्वस्य विक्रयम् ।
अविक्रेयं मद्यमांसमभक्ष्यस्य च भक्षणम् ॥ ६३ ॥
अगम्यागमनञ्चैव शूद्रोऽपि नरकं व्रजेत् ।
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ॥ ६४ ॥
वेदाक्षरविचारेण शूद्रस्य नरकं ध्रुवम् ॥

इति पाराशरे धर्म्मशास्त्रे प्रथमोऽध्यायः ॥ ६५ ॥

---

## द्वितीयोऽध्यायः ।

अतः परं गृहस्थस्य धर्म्माचारं कलौ युगे ।
धर्मं साधारणं शक्यं चातुर्वर्ण्याश्रमागतम् ॥ १ ॥

संप्रवक्ष्याम्यहं भूयः पाराशर्य्यप्रचोदितः ।
षट्कर्मनिरतो विप्रः कृषिकर्माणि कारयेत् ॥ २ ॥
हलमष्टगवं धर्म्यं षड्गवं मध्यमं स्मृतम् ।
चतुर्गवं नृशंसानां द्विगवं वृषघातिनाम् ॥ ३ ॥
क्षुधितं तृषितं श्रान्तं बलीवर्द्दं न योजयेत् ।
हीनाङ्गं व्याधितं क्लीवं वृषं विप्रो न वाहयेत् ॥ ४ ॥
स्थिराङ्गं नीरुजं दृप्तं वृषभं षण्ढवर्जितम् ।
वाहयेद्दिवसस्यार्द्धं पश्चात् स्नानं समाचरेत् ॥ ५ ॥
जपं देवार्च्चनं होमं स्वाध्यायं साङ्गमभ्यसेत् ।
एकद्वित्रिचतुर्विप्रान् भोजयेत् स्नातकान् द्विजः ॥ ६ ॥
स्वयंकृष्टे तथा क्षेत्रे धान्यैश्च स्वयमर्जितैः ।
निर्वपेत् पञ्च यज्ञानि क्रतुदीक्षाञ्च कारयेत् ॥ ७ ॥
तिला रसा न विक्रेया विक्रेया धान्यतः समाः ।
विप्रस्यैवंविधा वृत्तिस्तृणकाष्ठादिविक्रयः ॥ ८ ॥
ब्राह्मणस्तु कृषिं कृत्वा महादोषमवाप्नुयात् ।
संवत्सरेण यत् पापं मत्स्यघाती समाप्नुयात् ॥ ९ ॥
अयोमुखेन काष्ठेन तदेकाहेन लाङ्गली ।
पाशको मत्स्यघाती च व्याधः शाकुनिकस्तथा ॥ १० ॥
अदाता कर्षकश्चैव पञ्चैते समभागिनः ।
कण्डनी पेषणी चुल्ली उदकुम्भोऽथ मार्जनी ॥ ११ ॥
पञ्च सूना गृहस्थस्य अहन्यहनि वर्त्तते ।
वृक्षान् छित्त्वा महीं हत्वा हत्वा तु कृमिकीटकान् ॥ १२ ॥
कर्षकः खलु यज्ञेन सर्वपापैः प्रमुच्यते ।

यो न दद्याद् द्विजातिभ्यो राशिमूलमुपागतः ॥ १३ ॥
स चौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत् ।
राज्ञे दत्त्वा तु षड्भागं देवानाञ्चैकविंशकम् ॥ १४ ॥
विप्राणां त्रिंशकं भागं कृषिकर्त्ता न लिप्यते ।
क्षत्रियोऽपि कृषिं कृत्वा द्विजान् देवांश्च पूजयेत् ॥ १५ ॥
वैश्यः शूद्रः सदा कुर्यात् कृषिवाणिज्यशिल्पकान् ।
विकर्म कुर्वते शूद्रा द्विजसेवाविवर्जिताः ॥ १६ ॥
भवन्त्यल्पायुषस्ते वै पतन्ति नरकेषु च ।
चतुर्णामपि वर्णानामेष धर्मः सनातनः ॥ १७ ॥
इति पाराशरे धर्मशास्त्रे द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

अतः शुद्धिं प्रवक्ष्यामि जनने मरणे तथा ।
दिनत्रयेण शुध्यन्ति ब्राह्मणाः प्रेतसूतके ॥ १ ॥
क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशाहकैः ।
शूद्रः शुध्यति मासेन पराशरवचो यथा ॥ २ ॥
उपासने तु विप्राणामङ्गशुद्धिस्तु जायते ।
ब्राह्मणानां प्रसूतौ तु देहस्पर्शो विधीयते ॥ ३ ॥
जाते विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥ ४ ॥
एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः ।
त्र्यहात् केवलवेदस्तु विहीनो दशभिर्दिनैः ॥ ५ ॥
जन्मकर्मपरिभ्रष्टः सन्ध्योपासनवर्जितः ।

नामधारकविप्रस्य दशाहं सूतकं भवेत् ॥ ६ ॥
एकपिण्डास्तु दायादाः पृथग्दारनिकेतनाः ।
जन्मन्यपि विपत्तौ च भवेत्तेषां च सूतकम् ॥ ७ ॥
उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते ॥ ८ ॥
प्राप्नोति सूतकं गोत्रे चतुर्थपुरुषेण तु ।
दायाद्विच्छेदमाप्नोति पञ्चमो वात्मवंशजः ॥ ९ ॥
चतुर्थे दशरात्रं स्यात् षण्णिशाः पुंसि पञ्चमे ।
षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयम् ॥ १० ॥
पञ्चभिः पुरुषैर्युक्ता असमाहेया सगोत्रिणः ।
ततः षट्पुरुषाद्यास्तु अहो भोज्याः सगोत्रिणः ॥ ११ ॥
भृग्वग्निमरणे चैव देशान्तरमृते तथा ।
बाले प्रेते च सन्न्यासे सद्यः शौचं विधीयते ॥ १२ ॥
दशरात्रेष्वतीतेषु त्रिरात्राच्छुद्धिरिष्यते ।
ततः संवत्सरादूर्द्ध्वं सचैलं स्नानमाचरेत् ॥ १३ ॥
देशान्तरमृतः कश्चित् सगोत्रः श्रूयते यदि ।
न त्रिरात्रमहोरात्रं सद्यः स्नात्वा विशुद्ध्यति ॥ १४ ॥
आत्रिपक्षात्त्रिरात्रं स्यात्षण्मासाच्च पक्षिणी ।
अहः संवत्सरादर्वाक् सद्यः शौचं विधीयते ॥ १५ ॥
अजातदन्ता ये बाला ये च गर्भाद्विनिःसृताः ।
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥ १६ ॥
यदि गर्भो विपद्येत स्रवते वापि योषिताम् ।
यावन्मासं स्थितो गर्भो दिनं तावत् तु सूतकः ॥ १७ ॥

आचतुर्थाद्भवेत् स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्द्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥ १८ ॥
प्रसूतिकाले संप्राप्ते प्रसवे यदि योषिताम् ।
जीवापत्ये तु गोत्रस्य मृते मातुश्च सूतकम् ॥ १९ ॥
रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥ २० ॥
दन्तजातेऽनुजाते च कृतचूडे च संस्थिते ।
अग्निसंस्करणं तेषां त्रिरात्रं सूतकं भवेत् ॥ २१ ॥
आदन्तजननात् सद्य आचूडान्नैशिकी स्मृता ।
त्रिरात्रमाव्रतात्तेषां दशरात्रमतः परम् ॥ २२ ॥
गर्भे यदि विपत्तिः स्याद् दशाहं सूतकं भवेत् ।
जीवन् जातो यदि प्रेतः सद्य एव विशुद्ध्यति ॥ २३ ॥
स्त्रीणां चूडास आदानात् संक्रमात्तदधः क्रमात् ।
सद्यः शौचमथैकाहं त्रिरात्रः पितृबन्धुषु ॥ २४ ॥
ब्रह्मचारी गृहे येषां हूयते च हुताशने ।
सम्पर्कं न च कुर्वन्ति न तेषां सूतकं भवेत् ॥ २५ ॥
सम्पर्काद्दुष्यते विप्रो नान्यो दोषोऽस्ति ब्राह्मणे ।
सम्पर्केषु निवृत्तस्य न प्रेते नैव सूतकम् ॥ २६ ॥
शिल्पिनः कारुका वैद्या दासी दासाश्च नापिताः ।
श्रोत्रियाश्चैव राजानः सद्यः शौचाः प्रकीर्त्तिताः ॥ २७ ॥
सव्रती मन्त्रपूतश्च आहिताग्निश्च यो द्विजः ।
राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः ॥ २८ ॥
उद्यतो निधने दाने आर्त्तो विप्रो निमन्त्रितः ।

तदेव ऋषिभिर्दृष्टं यथाकालेन शुध्यति ॥ २९ ॥
प्रसवे गृहमेधी तु न कुर्यात् सङ्करं यदि ।
दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः ॥ ३० ॥
सर्वेषां शावमाशौचं मातापित्रोर्दशाहिकम् ।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥ ३१ ॥
यदि पत्न्यां प्रसूतायां सम्पर्कं कुरुते द्विजः ।
सूतकन्तु भवेत्तस्य यदि विप्रः षडङ्गवित् ॥ ३२ ॥
सम्पर्काज्जायते दोषो नान्यो दोषोऽस्ति ब्राह्मणे ।
तस्मात् सर्वप्रयत्नेन सम्पर्कं वर्जयेद् द्विजः ॥ ३३ ॥
विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्वं सङ्कल्पितं द्रव्यं दीयमानं न दुष्यति ॥ ३४ ॥
अन्तरा तु दशाहस्य पुनर्मरणजन्मनी ।
तावत् स्यादशुचिर्विप्रो यावत्तत् स्यादनिर्दशम् ॥ ३५ ॥
ब्राह्मणार्थे विपन्नानां वन्दिगोग्रहणे तथा ।
आहवेषु विपन्नानामेकरात्रन्तु सूतकम् ॥ ३६ ॥
द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः ॥ ३७ ॥
यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयाल्लभते लोकान् यदि क्लीवं न भाषते ॥ ३८ ॥
जितेन लभते लक्ष्मीं मृतेनापि सुराङ्गनाः ।
क्षणविध्वंसिके ऽमुष्मिन् का चिन्ता मरणे रणे ॥ ३९ ॥
यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः ।
परित्राता यदा गच्छेत् स च क्रतुफलं लभेत् ॥ ४० ॥

यस्य च्छेदक्षतं गात्रं शरशक्त्यृष्टिमुद्गरैः ।
देवकन्यास्तु तं वीरं गायन्ति रमयन्ति च ॥ ४१ ॥
वराङ्गनासहस्राणि शूरमायोधने हतं ।
नागकन्याश्च धावन्ति मम भर्त्ता भवेदिति ॥ ४२ ॥
ललाटदेशाद्रुधिरं स्रवच्च
तप्तस्य जन्तोः प्रविशेच्च वक्त्रे ।
तत् सोमपानेन किल तस्य तुल्यं
संग्रामयज्ञे विधिवच्च दृष्टम् ॥ ४३ ॥
यं यज्ञसंघैस्तपसा च विद्यया
स्वर्गैषिणो वात्र यथैव विप्राः ।
तथैव यान्त्येव हि तत्र वीराः
प्राणान् सुयुद्धेन परित्यजन्तः ॥ ४४ ॥
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदेपदे यज्ञफलमानुपूर्व्याल्लभन्ति ते ॥ ४५ ॥
असगोत्रमबन्धुञ्च प्रेतीभूतञ्च ब्राह्मणम् ।
नीत्वा च दाहयित्वा च प्राणायामेन शुध्यति ॥ ४६ ॥
न तेषामशुभं किञ्चिद् द्विजानां शुभकर्म्मणि ।
जलावगाहनात्तेषां शुद्धिः स्मृतिभिरीरिता ॥ ४७ ॥
अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा ।
स्नात्वा चैव तु स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ॥ ४८ ॥
क्षत्रियं मृतमज्ञानाद्ब्राह्मणो योऽनुगच्छति ।
एकाहमशुचिर्भूत्वा पञ्चगव्येन शुध्यति ॥ ४९ ॥
शवञ्च वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति ।

कृत्वा शौचं द्विराचम्य प्राणायामान् षडाचरेत् ॥ ५० ॥
प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
नयन्तमनुगच्छेत त्रिरात्रमशुचिर्भवेत् ॥ ५१ ॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥ ५२ ॥
विनिर्वर्त्य यदा शूद्रा उदकान्तमुपस्थिताः ।
द्विजैस्तदानुगन्तव्या इति धर्मविदो विदुः ॥ ५३ ॥
तस्माद् द्विजो मृतं शूद्रं न स्पृशेन्न च दाहयेत् ।
दृष्टे सूर्य्यावलोकेन शुद्धिरेषा पुरातनी ॥ ५४ ॥

इति पाराशरे धर्मशास्त्रे तृतीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः ।

अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात् ।
उद्बध्नीयात् स्त्री पुमान् वा गतिरेषा विधीयते ॥ १ ॥
पूयशोणितसंपूर्णे अन्धे तमसि मज्जति ।
षष्टिवर्षसहस्राणि नरकं प्रतिपद्यते ॥ २ ॥
नाशौचं नोदकं नाग्निं नाश्रुपातञ्च कारयेत् ।
वोढारोऽग्निप्रदातारः पाशच्छेदकरास्तथा ॥ ३ ॥
तप्तकृच्छ्रेण शुध्यन्तीत्येवमाह प्रजापतिः ।
गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम् ॥ ४ ॥
संस्पृशन्ति तु ये विप्रा वोढारश्चाग्निदाश्च ये ।
अन्येऽपि वानुगन्तारः पाशच्छेदकराश्च ये ॥ ५ ॥
तप्तकृच्छ्रेण शुध्यन्ति कुर्य्युर्ब्राह्मणभोजनम् ।

अनडुत्सहितां गाञ्च दद्युर्विप्राय दक्षिणाम् ॥ ६ ॥
त्र्यहमुष्णं पिबेदापस्त्र्यहमुष्णं पयः पिबेत् ।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम् ॥ ७ ॥
यो वै समाचरेद्विप्रः पतितादिष्वकामतः ।
पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥ ८ ॥
मासार्द्धं मासमेकं वा मासद्वयमथापि वा ।
अब्दार्द्धमब्दमेकं वा तदूर्द्ध्वं चैव तत्समः ॥ ९ ॥
त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत् ।
तृतीये चैव पक्षे तु कृच्छ्रं सान्तपनं चरेत् ॥ १० ॥
चतुर्थे दशरात्रं स्यात् पराकः पञ्चमे मतः ।
कुर्य्याच्चान्द्रायणं षष्ठे सप्तमे त्वैन्दवद्वयम् ॥ ११ ॥
शुद्ध्यर्थमष्टमे चैव षण्मासात् कृच्छ्रमाचरेत् ।
पक्षसंख्याप्रमाणेन सुवर्णान्यपि दक्षिणा ॥ १२ ॥
ऋतुस्नाता तु या नारी भर्त्तारं नोपसर्पति ।
सा मृता नरकं याति विधवा च पुनःपुनः ॥ १३ ॥
ऋतौ स्नातान्तु यो भार्य्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ १४ ॥
अदुष्टापतितां भार्य्यां यौवने यः परित्यजेत् ।
सप्तजन्म भवेत् स्त्रीत्वं वैधव्यञ्च पुनःपुनः ॥ १५ ॥
दरिद्रं व्याधितं मूर्खं भर्त्तारं या न मन्यते ।
सा मृता जायते व्याली वैधव्यञ्च पुनःपुनः ॥ १६ ॥
ओघवाताहृतं बीजं यथा क्षेत्रे प्ररोहति ।
क्षेत्री तल्लभते बीजं न बीजी भागमर्हति ॥ १७ ॥

यद्वत् परस्त्रियाः पुत्रौ द्वौ सुतौ कुण्डगोलकौ।
पत्यौ जीवति कुण्डः स्यात् मृते भर्तरि गोलकः॥ १८॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः।
दद्यान्माता पिता वापि स पुत्रो दत्तको भवेत्॥ १९॥
परिवित्तिः परिवेत्ता यया च परिविद्यते।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥ २०॥
दाराग्निहोत्रसंयोगं यः कुर्वीताग्रजे सति।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥ २१॥
द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च।
कृच्छ्रातिकृच्छ्रौ दातुश्च होता चान्द्रायणं चरेत्॥ २२॥
कुब्जवामनषण्ढेषु गद्गदेषु जडेषु च।
जात्यन्धे बधिरे मूके न दोषः परिवेदने॥ २३॥
पितृव्यपुत्रः सापत्न्यः परनारीसुतस्तथा।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने॥ २४॥
ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव चिन्तयेत्।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा॥ २५॥
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो न विद्यते॥ २६॥
मृते भर्तरि या नारी ब्रह्मचर्ये व्यवस्थिता।
सा मृता लभते स्वर्गं यथा सद्ब्रह्मचारिणः॥ २७॥
तिस्रः कोट्यर्द्धकोटी च यानि रोमाणि मानुषे।
तावत् कालं वसेत् स्वर्गे भर्तारं यानुगच्छति॥ २८॥
व्यालग्राही यथा व्यालं बिलादुद्धरते बलात्।

एवमुद्धृत्य भर्तारं तेनैव सह मोदते॥ २९॥

इति पाराशरे धर्मशास्त्रे चतुर्थोऽध्यायः॥

---

## पञ्चमोऽध्यायः।

श्ववृकाभ्यां शृगालाद्यैर्यदि दष्टस्तु ब्राह्मणः।
स्नात्वा जपेत गायत्रीं पवित्रां वेदमातरम्॥ १॥
गवां शृङ्गोदके स्नातो महानद्योस्तु सङ्गमे।
समुद्रदर्शनाद्वापि शुना दष्टः शुचिर्भवेत्॥ २॥
वेदविद्याव्रतस्नातः शुना दष्टस्तु ब्राह्मणः।
स हिरण्योदके स्नात्वा घृतं प्राश्य विशुध्यति॥ ३॥
सव्रतस्तु शुना दष्टस्त्रिरात्रं समुपोषितः।
घृतं कुशोदकं पीत्वा व्रतशेषं समापयेत्॥ ४॥
अव्रतः सव्रतो वापि शुना दष्टो भवेद्द्विजः।
प्रणिपत्य भवेत् पूतो विप्रैश्चानुनिरीक्षितः॥ ५॥
शुना घ्रातावलीढस्य नखैर्विलिखितस्य च।
अद्भिः प्रक्षालनाच्छुद्धिरग्निना चोपचूलनम्॥ ६॥
शुना च ब्राह्मणी दष्टा जम्बुकेन वृकेण वा।
उदितं सोमनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत्॥ ७॥
कृष्णपक्षे यदा सोमो न दृश्येत कदाचन।
यां दिशं व्रजते सोमस्तां दिशञ्चावलोकयेत्॥ ८॥
असद्ब्राह्मणके ग्रामे शुना दष्टस्तु ब्राह्मणः।
वृषं प्रदक्षिणीकृत्य सद्यः स्नात्वा विशुध्यति॥ ९॥
चाण्डालेन श्वपाकेन गोभिर्विप्रैर्हतो यदि।

आहिताग्निर्मृतो विप्रो विषेणात्महतो यदि ॥ १० ॥
दहेत्तं ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम् ।
स्पृष्ट्वा चोह्य च दग्ध्वा च सपिण्डेषु च सर्वथा ॥ ११ ॥
प्राजापत्यं चरेत् पश्चाद्विप्राणामनुशासनात् ।
दग्ध्वास्थीनि पुनर्गृह्य क्षीरैः प्रक्षालयेद् द्विजः ॥ १२ ॥
पुनर्दहेत् स्वकाग्नौ तन्मन्त्रेण च पृथक् पृथक् ।
आहिताग्निर्द्विजः कश्चित् प्रवसन् कालचोदितः ॥ १३ ॥
देहनाशमनुप्राप्तस्तस्याग्निर्वर्तते गृहे ।
श्रौताग्निहोत्रसंस्कारः श्रूयतामृषिसत्तमाः ! ॥ १४ ॥
कृष्णाजिनं समास्तीर्य कुशैश्च पुरुषाकृतिम् ।
षट् शतानि शतं चैव पलाशानाञ्च वृन्तकम् ॥ १५ ॥
चत्वारिंशच्छिरे दद्यात् षष्टिं कण्ठे विनिर्दिशेत् ।
बाहुभ्याञ्च शतं दद्यादङ्गुलीषु दशैव तु ॥ १६ ॥
शतं चोरसि संदद्यात् त्रिंशच्चैवोदरे न्यसेत् ।
अष्टौ वृषणयोर्दद्यात् पञ्च मेढ्रे च विन्यसेत् ॥ १७ ॥
एकविंशतिमूरुभ्यां जानुजङ्घे च विंशतिम् ।
पादाङ्गुल्योः शतार्द्धञ्च पालाशि च तथा न्यसेत् ॥ १८ ॥
शम्यां शिश्ने विनिःक्षिप्य अरणीं वृषणे तथा ।
जुहूं दक्षिणहस्तेन वामहस्ते तथोपसत् ॥ १९ ॥
कर्णे चोदूखलं दद्यात् पृष्ठे च मुषलं ततः ।
निःक्षिप्योरसि दृषदं तण्डुलाज्यतिलान्मुखे ॥ २० ॥
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीञ्च चक्षुषोः ।
कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलं क्षिपेत् ॥ २१ ॥

अग्निहोत्रोपकरणं गात्रे शेषं प्रविन्यसेत् ।
असौ स्वर्गाय लोकाय स्वाहेति च घृताहुतीः ॥ २२ ॥
दद्यात् पुत्रोऽथवा भ्राता ह्यन्ये वापि स्वधर्मिणः ।
यथा दहनसंस्कारस्तथा कार्यं विचक्षणैः ॥ २३ ॥
ईदृशं तु विधिं कुर्याद्ब्रह्मलोके गतिर्ध्रुवम् ।
ये दहन्ति द्विजास्तन्तु ते यान्ति परमां गतिम् ॥ २४ ॥
अन्यथा कुर्वते किञ्चिदात्मबुद्धिप्रबोधिताः ।
भवन्त्यल्पायुषस्ते वै पतन्ति नरके ध्रुवम् ॥ २५ ॥
इति पाराशरे धर्मशास्त्रे पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः ।

अतः परं प्रवक्ष्यामि प्राणिहत्यासु निष्कृतिम् ।
पराशरेण पूर्वोक्तां मन्वर्थेऽपि च विस्तृताम् ॥ १ ॥
हंससारसक्रौञ्चांश्च चक्रवाकं सकुक्कुटम् ।
जालपादांश्च शरभमहोरात्रेण शुद्ध्यति ॥ २ ॥
बलाकाटिट्टिभानाञ्च शुकपारावतादिनाम् ।
आटिनाञ्च बकानाञ्च शुद्ध्यते नक्तभोजनात् ॥ ३ ॥
भासकाककपोतानां सारीतित्तिरिघातकः ।
अन्तर्जले उभे सन्ध्ये प्राणायामेन शुद्ध्यति ॥ ४ ॥
गृध्रश्येनशिखिग्राहचासो*लूकनिपातने ।
अपक्काशी दिनं तिष्ठेत्त्रिकालं मारुताशनः ॥ ५ ॥
वल्गुणीचटकानाञ्च कोकिलाखञ्जरीटकान् ।

---

* चासो—पा० १ । चाषो—पा० २ ।

लावकारक्तपादांश्च शुद्ध्यन्ते नक्तभोजनात् ॥ ६ ॥
कारण्डवचकोराणां पिङ्गलाकुररस्य च ।
भारद्वाजनिहन्ता च शुद्ध्यते शिवपूजनात् ॥ ७ ॥
भेरुण्डश्येनभासांश्च पारावतकपिञ्जलान् ।
पक्षिणामेव सर्वेषामहोरात्रेण शुद्ध्यति ॥ ८ ॥
हत्वा नकुलमार्जारसर्पाजगरडुण्डुभान् ।
कृशरं भोजयेद्विप्रान् लोहदण्डं च दक्षिणाम् ॥ ९ ॥
शल्लकीशशका*गोधामत्स्यकूर्माभिपातने ।
वृन्ताकफलभोक्ता च ह्यहोरात्रेण शुद्ध्यति ॥ १० ॥
वृकजम्बूकऋक्षाणां तरक्षूणाञ्च घातने ।
तिलप्रस्थं द्विजे दद्याद्वायुभक्षो दिनत्रयम् ॥ ११ ॥
गजगवयतुरङ्गानां महिषोष्ट्रनिपातने ।
शुद्ध्यते सप्तरात्रेण विप्राणां तर्पणेन च ॥ १२ ॥
मृगं रुरुं वराहञ्च अज्ञानाद्यस्तु घातयेत् ।
अफालकृष्टमश्नीयादहोरात्रेण शुद्ध्यति ॥ १३ ॥
एवं चतुष्पदानाञ्च सर्वेषां वनचारिणाम् ।
अहोरात्रोषितस्तिष्ठेज्जपन् वै जातवेदसम् ॥ १४ ॥
शिल्पिनं कारुकं शूद्रं स्त्रियं वा यस्तु घातयेत् ।
प्राजापत्यद्वयं कुर्याद्वृषैकादशदक्षिणा ॥ १५ ॥
वैश्यं वा क्षत्रियं वापि निर्दोषमभिघातयेत् ।
सोऽतिकृच्छ्रद्वयं कुर्याद्गोविंशं दक्षिणां ददेत् ॥ १६ ॥
वैश्यं शूद्रं क्रियासक्तं विकर्मस्थं द्विजोत्तमम् ।

---

* शशकौ—पा० १ ।

हत्वा चान्द्रायणं कुर्याद्दद्याद्गोत्रिंशदक्षिणाम् ॥ १७ ॥
क्षत्रियेणापि वैश्येन शूद्रेणैवेतरेण वा ।
चाण्डालवधसंप्राप्तः कृच्छ्रार्द्धेन विशुद्ध्यति ॥ १८ ॥
चौराः श्वपाकचाण्डाला विप्रेणापि हता यदि ।
अहोरात्रोपवासेन प्राणायामेन शुद्ध्यति ॥ १९ ॥
श्वपाकं वापि चाण्डालं विप्रः सम्भाषते यदि ।
द्विजसम्भाषणं कुर्याद्गायत्रीं वा सकृज्जपेत् ॥ २० ॥
चाण्डालैः सह सुप्तन्तु त्रिरात्रमुपवासयेत् ।
चाण्डालैकपथङ्गत्वा गायत्रीस्मरणाच्छुचिः ॥ २१ ॥
चाण्डालदर्शनेनैव आदित्यमवलोकयेत् ।
चाण्डालस्पर्शने चैव सचैलं स्नानमाचरेत् ॥ २२ ॥
चाण्डालखातवापीषु पीत्वा सलिलमग्रजः ।
अज्ञानाच्चैव नक्तेन त्वहोरात्रेण शुद्ध्यति ॥ २३ ॥
चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥ २४ ॥
चाण्डालोदकभाण्डे तु अज्ञानात् पिबते जलम् ।
तत्क्षणात् क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥ २५ ॥
यदि न क्षिपते तोयं शरीरे यस्य जीर्यति ।
प्राजापत्यं न दातव्यं कृच्छ्रं सान्तपनञ्चरेत् ॥ २६ ॥
चरेत् सान्तपनं विप्रः प्राजापत्यन्तु क्षत्रियः ।
तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥ २७ ॥
भाण्डस्थमन्त्यजानान्तु जलं दधि पयः पिबेत् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥ २८ ॥

ब्राह्मकूर्च्चोपवासेन द्विजातीनान्तु निष्कृतिः ।
शूद्रस्य चोपवासेन तथा दानेन शक्तितः ॥ २९ ॥
ब्राह्मणो ज्ञानतो भुङ्क्ते चाण्डालान्नं कदाचन ।
गोमूत्रयावकाहाराद्दशरात्रेण शुद्ध्यति ॥ ३० ॥
एकैकं ग्रासमश्नीयाद्गोमूत्रयावकस्य च ।
दशाहनियमस्थस्य व्रतं तत्र विनिर्द्दिशेत् ॥ ३१ ॥
अविज्ञातस्तु चाण्डालः सन्तिष्ठेत्तस्य वेश्मनि ।
विज्ञाते तूपसंन्यस्य द्विजाः कुर्य्यन्त्यनुग्रहम् ॥ ३२ ॥
ऋषिवक्त्राच्च्युता धर्म्मास्त्रायन्ते वेदपावनाः ।
पतन्तमुद्धरेयुस्ते धर्म्मज्ञाः पापसङ्कटात् ॥ ३३ ॥
दध्ना च सर्पिषा चैव क्षीरगोमूत्रयावकम् ।
भुञ्जीत सह सर्वैस्तु त्रिसन्ध्यमवगाहनम् ॥ ३४ ॥
त्र्यहं भुञ्जीत दध्ना च त्र्यहं भुञ्जीत सर्पिषा ।
त्र्यहं क्षीरेण भुञ्जीत एकैकेन दिनत्रयम् ॥ ३५ ॥
भावदुष्टं न भुञ्जीयान्नोच्छिष्टं कृमिदूषितम् ।
त्रिपलं दधिदुग्धस्य पलमेकन्तु सर्पिषः ॥ ३६ ॥
भस्मना तु भवेच्छुद्धिरुभयोस्ताम्रकांसयोः ।
जलशौचेन वस्त्राणां परित्यागेन मृण्मयम् ॥ ३७ ॥
कुसुम्भगुड़कार्पासलवणं तैलसर्पिषी ।
द्वारे कृत्वा तु धान्यानि गृहे दद्याद्धुताशनम् ॥ ३८ ॥
एवं शुद्धस्ततः पश्चात् कुर्य्याद्ब्राह्मणभोजनम् ।
त्रिंशतं गा वृषञ्चैकं दद्याद्विप्रेषु दक्षिणाम् ॥ ३९ ॥
पनर्लेपनया तेन होमजप्येन शुद्ध्यति ।

आधारेण च विप्राणां भूमिदोषो न विद्यते ॥ ४० ॥
रजकी चर्मकारी च लुब्धकस्य च पुक्कसी ।
चातुर्वर्ण्यगृहे यस्य ग्रामादधितिष्ठति ॥ ४१ ॥
ज्ञात्वा तु निष्कृतिं कुर्यात् पूर्वोक्तस्यार्द्धमेव च ।
गृहदाहं न कुर्वीताप्यन्यत् सर्वं च कारयेत् ॥ ४२ ॥
गृहस्याभ्यन्तरे गच्छेच्चाण्डालो यस्य कस्यचित् ।
तस्माद्गृहाद्विनिःकृत्य गृहभाण्डानि वर्जयेत् ॥ ४३ ॥
रसपूर्णं तु यद्भाण्डं न त्यजेच्च कदाचन ।
गोरसेन तु संमिश्रैर्जलैः प्रोक्षेत् समन्ततः ॥ ४४ ॥
ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे ।
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥ ४५ ॥
गवां मूत्रपुरीषेण दध्ना क्षीरेण सर्पिषा ।
त्र्यहं स्नात्वा च पीत्वा कृमिदुष्टः शुचिर्भवेत् ॥ ४६ ॥
क्षत्रियोऽपि सुवर्णस्य पञ्च माषान् प्रदापयेत् ।
गोदक्षिणान्तु वैश्यस्याप्युपवासं विनिर्द्दिशेत् ॥ ४७ ॥
शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुद्ध्यति ।
ब्राह्मणांस्तु नमस्कृत्य पञ्चगव्येन शुद्ध्यति ॥ ४८ ॥
अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा धार्यमग्निष्टोमफलं हि तत् ॥ ४९ ॥
व्याधिव्यसनिनि श्रान्ते दुर्भिक्षे डामरे तथा ।
उपवासो व्रतो होमो द्विजसम्पादितानि वा ॥ ५० ॥
अथ वा ब्राह्मणास्तुष्टाः स्वयं कुर्वन्त्यनुग्रहम् ।
सर्वधर्ममवाप्नोति द्विजैः सम्पादिताशिषा ॥ ५१ ॥

दुर्बलेऽनुग्रहः कार्यस्तथा च बालवृद्धयोः ।
अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहः स्मृतः ॥ ५२ ॥
स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा ।
कुर्वन्त्यनुग्रहं ये वै तत् पापं तेषु गच्छति ॥ ५३ ॥
शरीरस्यात्यये प्राप्ते वदन्ति नियमन्तु ये ।
महत्कार्योपरोधेन न स्वस्थस्य कदाचन ॥ ५४ ॥
स्वस्थस्य मूढाः कुर्वन्ति नियमन्तु वदन्ति ये ।
ते तस्य विघ्नकर्तारः पतन्ति नरकेऽशुचौ ॥ ५५ ॥
स एव नियमस्त्याज्यो ब्राह्मणं योऽवमन्यते ।
वृथा तस्योपवासः स्यान्न स पुण्येन युज्यते ॥ ५६ ॥
स एव नियमो ग्राह्यो यं यं कोऽपि वदेद् द्विजः ।
कुर्याद्वाक्यं द्विजानाञ्च अकुर्वन् ब्रह्महा भवेत् ॥ ५७ ॥
उपवासो व्रतञ्चैव स्नानं तीर्थं जपस्तपः ।
विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तद्भवेत् ॥ ५८ ॥
व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि ।
सर्वं भवति निश्छिद्रं ब्राह्मणैरुपपादितम् ॥ ५९ ॥
ब्राह्मणा जङ्गमं तीर्थं निर्जलं सर्वकामदम् ।
तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः ॥ ६० ॥
ब्राह्मणा यानि भाषन्ते भाषन्ते तानि देवताः ।
सर्ववेदमया विप्रा न तद्वचनमन्यथा ॥ ६१ ॥
अन्नाद्ये कीटसंयुक्ते मक्षिकाकीटदूषिते ।
अन्तरा संस्पृशेच्चापस्तदन्नं भस्मना स्पृशेत् ॥ ६२ ॥
भुञ्जानो हि यदा विप्रः पादं हस्तेन संस्पृशेत् ।

उच्छिष्टं हि स वै भुङ्क्ते यो भुङ्क्ते मुक्तभाजने ॥ ६३ ॥
पादुकास्थो न भुञ्जीत पर्यङ्के संस्थितोऽपि वा ।
शुना चाण्डालदृष्टो वा भोजनं परिवर्जयेत् ॥ ६४ ॥
पक्वान्नञ्च निषिद्धं यदन्नशुद्धिस्तथैव च ।
यथा पराशरेणोक्तं तथैवाहं वदामि वः ॥ ६५ ॥
मितं द्रोणाढकस्यान्नं काकश्वानोपघातितम् ।
केनैतच्छुद्ध्यते चान्नं ब्राह्मणेभ्यो निवेदयेत् ॥ ६६ ॥
काकश्वानावलीढन्तु द्रोणान्नं न परित्यजेत् ।
वेदवेदाङ्गविद्विप्रैर्धर्मशास्त्रानुपालकैः ॥ ६७ ॥
प्रस्था द्वात्रिंशतिर्द्रोणः स्मृतो द्विप्रस्थ आढकः ।
ततो द्रोणाढकस्यान्नं श्रुतिस्मृतिविदो विदुः ॥ ६८ ॥
काकश्वानावलीढं तु गवाघ्रातं खरेण वा ।
स्वल्पमन्नं त्यजेद्विप्रः शुद्धिर्द्रोणाढके भवेत् ॥ ६९ ॥
अन्यस्योद्धृत्य तन्मात्रं यच्च नोपहतं भवेत् ।
सुवर्णोदकमभ्युक्ष्य हुताशेनैव तापयेत् ॥ ७० ॥
हुताशनेन संस्पृष्टं सुवर्णसलिलेन च ।
विप्राणां ब्रह्मघोषेण भोज्यं भवति तत्क्षणात् ॥ ७१ ॥

इति पाराशरे धर्मशास्त्रे षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः ।

अथातो द्रव्यसंशुद्धिः पराशरवचो यथा ।
दारवाणान्तु पात्राणां तत्क्षणाच्छुद्धिरिष्यते ॥ १ ॥
मार्जनाद् यज्ञपात्राणां पाणिना यज्ञकर्मणि ।

चमसानां ग्रहाणाञ्च शुद्धिः प्रक्षालनेन तु ॥ २ ॥
चरूणां स्रुक्स्रुवाणाञ्च शुद्धिरुष्णेन वारिणा ।
भस्मना शुद्ध्यते कांस्यं ताम्रमम्लेन शुद्ध्यति ॥ ३ ॥
रजसा शुद्ध्यते नारी विकलं या न गच्छति ।
नदी वेगेन शुद्ध्येत लेपो यदि न दृश्यते ॥ ४ ॥
वापीकूपतडागेषु दूषितेषु कथञ्चन ।
उद्धृत्य वै घटशतं पञ्चगव्येन शुद्ध्यति ॥ ५ ॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत् कन्या अत ऊर्द्ध्वं रजस्वला ॥ ६ ॥
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिबन्ति पितरः स्वयम् ॥ ७ ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ ८ ॥
यस्तां समुद्वहेत् कन्यां ब्राह्मणोऽज्ञानमोहितः ।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥ ९ ॥
यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
स भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्विशुद्ध्यति ॥ १० ॥
अस्तं गते यदा सूर्ये चाण्डालं पतितं स्त्रियम् ।
सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधीयते ॥ ११ ॥
जातवेदं सुवर्णं च सोममार्गं विलोक्य च ।
ब्राह्मणानुगतश्चैव स्नानं कृत्वा विशुद्ध्यति ॥ १२ ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी ब्राह्मणी तथा ।
तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुद्ध्यति ॥ १३ ॥

स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी क्षत्रिया तथा ।
अर्द्धकृच्छ्रं चरेत् पूर्वा पादमेकमनन्तरा ॥ १४ ॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी वैश्यजा तथा ।
पादोनं चैव पूर्वीयाः परायाः कृच्छ्रपादकम् ॥ १५ ॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजा तथा ।
कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानेन शुध्यति ॥ १६ ॥
स्नाता रजस्वला या तु चतुर्थेऽहनि शुध्यति ।
कुर्याद्रजोनिवृत्तौ तु दैवपित्र्यादिकर्म च ॥ १७ ॥
रोगेण यद्रजः स्त्रीणामन्वहन्तु प्रवर्त्तते ।
नाशुचिः सा ततस्तेन तत् स्याद्वैकालिकं मतम् ॥ १८ ॥
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥ १९ ॥
आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ।
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत् स आतुरः ॥ २० ॥
उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ २१ ॥
अनुच्छिष्टेन शूद्रेण स्नानं स्पर्शे विधीयते ।
उच्छिष्टेन च संस्पृष्टः प्राजापत्यं समाचरेत् ॥ २२ ॥
भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते ।
सुरामात्रेण संस्पृष्टं शुध्यतेऽग्न्युपलेपनैः ॥ २३ ॥
गवा घ्रातानि कांस्यानि श्वकाकोपहतानि च ।
शुध्यन्ति दशभिः क्षारैः शूद्रोच्छिष्टानि यानि च ॥ २४ ॥
गण्डूषं पादशौचं च कृत्वा वै कांस्यभाजने ।

षण्मासाद् भुवि निक्षिप्य उद्धृत्य पुनराचरेत् ॥ २५ ॥
आयसेष्वपसारेण सीसस्याग्नौ विशोधनम् ।
दन्तमस्थि तथा शृङ्गं रौप्यं सौवर्णभाजनम् ॥ २६ ॥
मणिपाषाणशङ्खाश्च एतान् प्रक्षालयेज्जलैः ।
पाषाणे तु पुनर्घृष्टिरेषा शुद्धिरुदाहृता ॥ २७ ॥
मृण्डाण्डदहनाच्छुद्धिर्धान्यानां मार्जनादपि ।
अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ॥ २८ ॥
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ।
वेणुवल्कलचीराणां क्षौमकार्पासवाससाम् ॥ २९ ॥
और्णानां नेत्रपट्टानां जलाच्छौचं विधीयते ।
तूलिकाद्युपधानानि पीतरक्ताम्बराणि च ॥ ३० ॥
शोषयित्वार्कतापेन प्रोक्षयित्वा शुचिर्भवेत् ।
मुञ्जोपस्करशूर्पाणां शाणस्य फलचर्मणाम् ॥ ३१ ॥
तृणकाष्ठादिरज्जूनामुदकप्रोक्षणं मतम् ।
मार्जारमक्षिकाकीटपतङ्गक्रमिदर्दुराः ॥ ३२ ॥
मेध्यामेध्यं स्पृशन्त्येव नोच्छिष्टान् मनुरब्रवीत् ।
भूमिं स्पृष्ट्वा गतं तोयं यश्चान्योन्यविप्रुषः ॥ ३३ ॥
भुक्तोच्छिष्टं तथा स्नेहं नोच्छिष्टं मनुरब्रवीत् ।
ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने ॥ ३४ ॥
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ।
रथ्याकर्द्दमतोयानि नावः पन्थास्तृणानि च ॥ ३५ ॥
मरुतार्केण शुद्ध्यन्ति पक्केष्टकाचितानि च ।
अदुष्टा सन्तता धारा वातोद्धूताश्च रेणवः ॥ ३६ ॥

